चन्द्रसूर्य्यग्रहे पीतं पलमेकं पयोऽन्वितम् ।
दद्यायास्तत्त्वचं कुर्य्यात् महाप्रज्ञान्वितं नरम् ॥
भूनिम्बनिम्बत्रिफलापर्पटैश्च पृतं जलम् ।
पटोलीमुस्तकाभ्याञ्च वासकेन च नाशयेत् ।
विस्फोटकानि व्यक्तानि नात्र कार्य्या विचारणा ।
कतकस्य फलं शङ्खं सैन्धवं त्र्युषणं वचा ॥
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला ।
एषां वर्त्तिर्हन्ति काचं तिमिरं पटलं तथा ॥
प्रस्थे द्वे गण्डमालानां क्वाथयेद्द्रोणमम्भसाम् ।
चतुर्भागावशेषेण तैलप्रस्थं विपाचयेत् ॥
काञ्जिकस्याढ़कं दत्त्वा पिष्टान्येतानि दापयेत् ।
पुनर्णवा गोक्षुरकं सैन्धवं त्र्युषणं वचा ।
सरलं सुरदारुञ्च मञ्जिष्ठा कण्टकारिका ।
नस्यपानाद्धरत्येव कर्णशूलं हनुग्रहम् ॥
वाधिर्य्यं सर्व्वरोगांश्च अभ्यङ्गाच्च महेश्वर ! ॥
पलद्वयं सैन्धवञ्च शुण्ठी चित्रकपञ्चकम् ।
पञ्चप्रस्थं त्वारनालं तैलप्रस्थं पचेत्ततः ।
ग्रहण्यर्शःस्वरश्लीहसर्व्ववातविकारनुत् ॥
उदुम्बरं वटप्लक्षं जम्बुद्वयमथार्ज्जुनम् ।
पिप्पलञ्च कदम्बञ्च पलाशं लोध्रतिन्दुकम् ॥
मधुकमाम्रसर्जञ्च वदरं पद्मकेशरम् ।
शिरीषवीजं कतकमेतत्क्वाथेन साधितम् ।
तैलं हन्ति व्रणाक्लेपाच्चिरकालभवानपि" ॥
इति गारुड़े १९८ अध्यायः ॥ * ॥

हरिरुवाच ।

"पाठा द्वे रजनी कुष्ठमश्वगन्धाजमोदकम् ।
वचा त्रिकटुकञ्चैव लवणं चूर्णमुत्तमम् ॥
ब्राह्मीरसे भावितञ्च सर्पिर्मधुसमन्वितम् ।
सप्ताहं भक्षितं कुर्य्यान्मदैश्वर्य्यं मतिं पराम् ॥
सिद्धार्थकवचाहिङ्गुकरञ्जं देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता शिरीषो रजनीद्वयम् ॥
प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणावघर्षितम् ।
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ॥
अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् ।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शासनम् ॥
निम्बकुष्ठे हरिद्रे द्वे शिग्रु सर्षपजस्तरुः ।
देवदारु पटोलञ्च धान्यं तक्रेण घर्षितम् ॥
देहं तलाक्तगात्रं वै अनेनोद्वर्त्तयेत्ततः ।
पामाः कुष्ठानि नश्येयुःकण्डुं पिटकसक्थिकीम् ॥
सामुद्रं सैन्धवं क्षारो राजिका लवणं विड़म् ।
कटुकोहरजः कीटं त्रिवृत् सूरणकं समम् ॥
दधिगोमूत्रपयसा मन्दपावकपाचितम् ।
एतच्चाग्निबलं चूर्णं पिबेदुष्णेन वारिणा ॥
जीर्णे जीर्णे च भुञ्जीत मांसादिघृतभोजनम् ।
नाभिशूलं मूत्रशूलं गुल्मप्लीहभवञ्च यत् ।
सर्व्वशूलहरं चूर्णं जठरानलदीपनम् ।
परिणामसमुत्थस्य शूलस्य च हितं परम् ॥
अभयामलकं द्राक्षा पिप्पली कण्टकारिका ।
शृङ्गं पुनर्णवा शुण्ठी जग्ध्वा कासं निहन्ति वै ॥
अभयामलकं द्राक्षा पाठा चैव विभीतकम् ।
शर्क्करा च समञ्चैव जग्धं ज्वरहरं भवेत् ॥
त्रिफला वदरं द्राक्षा पिप्पली च विरेचकृत् ।
हरीतकी सोष्णनीरा लवणञ्च विरेचकृत् ॥
कूर्म्ममत्स्याखुमहिषगोशृगालाश्च वानराः ।
विड़ालवर्हिकाकाश्च वराहोलूककुक्कुटाः ॥
हंस एषाञ्च विण्मूत्रं मांसं वा रोमशोणितम् ।
धूपं दद्यात् ज्वरार्त्तेभ्य उन्मत्तेभ्यश्च शान्तये ॥
अपस्माराभिभूतेभ्यो ग्रहार्त्तेभ्यश्च शान्तये ।
एतान्यौषधजातानि कथितानि महेश्वर ! ॥
निहन्ति यानि रोगाणि वृत्तमिन्द्राशनिर्यथा ।
औषधे भगवान् विष्णुः स्मृतोऽसौ रोगनुद्भवेत् ॥
ध्यातोऽर्च्चितः स्तुतो वापि नात्र कार्य्या विचारणा" ॥
इति गारुड़े १९९ अध्यायः ॥
(विष्णुः । यथा महाभारते।विष्णोः सहस्रनाम-कीर्त्तने । १३ । १४९ । ४४ ।
"अमृतांशूद्भवो भानुः शशविन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्म्मः पराक्रमः" ॥)

औषरं, क्ली, (उषरे भवं । उषर + अण् ।) पांशव-लवणम् । अयस्कान्तभेदः । इति राजनिर्घण्टः ॥ (पांशवलवणशब्देऽस्य गुणादिकं ज्ञेयम् ॥)

औषरकं, क्ली, ( औषर + स्वार्थे कन् । ) मृत्तिका-लवणम् । खारी लूण इति भाषा । तत्पर्य्यायः । सार्व्वगुणम् २ सर्व्वसंसर्गलवणम् ३ उषरकम् ४ साम्बरम् ५ वङ्गलवणम् ६ मेलकलवणम् ७ मिश्रम् ८ । अस्य गुणाः । कटुत्वम् । क्षारत्वम् । तिक्तत्वम् । वातकफनाशित्वम् । विदाहित्वम् । पित्तमलबन्धमूत्रसंशोषकारित्वञ्च । इति राज-निर्घण्टः ॥

औष्ट्रकं, क्ली, ( उष्ट्राणां समूहः । उष्ट्रस्य विकारः अवयवो वा । उष्ट्र + "गोत्रोक्षोष्ट्रोरभ्रेति" । ४ । २ । ३९ । वुञ् । ) उष्ट्रसमूहः । इत्यमरः ॥ उटेर पाल इति भाषा । ( उष्ट्रदुग्धार्थे यथा ॥ वाभटे सूत्रस्थाने । ५ अ ॥
"ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ।
शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम्" ॥)

औष्ण्यं, क्ली, (उष्णन् + ष्यञ् ।) उष्णणो भावः । उष्णता ॥ (यथा रघुः । १७ । ३३ ।
"पूर्व्वराजवियोगौष्ण्यं कृत्स्नस्य जगतो हृतम्" ॥)

---

## अं

अं अंकारः । स तु अनुस्वारः । तन्त्रमते पञ्चदश-स्वरवर्णः । (स तु पाणिन्यादिमते अयोगवाह एव
"अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" ।
इत्युक्तेः । नहि योगः अक्षरसमाम्नायसूत्रेषु येषां ते अयोगास्तथापि वाहयन्ति णत्वषत्वकार्य्यं नि-र्व्वाहयन्तीति वाहाः अयोगाश्च ते वाहाश्चेति अयोगवाहा अनुस्वारविसर्गजिह्वामूलीयोपध्मा-नीया इत्यर्थः ।)
विन्दमात्रानुनासिकवर्णोऽयं अकार उच्चारणार्थः । वोपदेवेनास्य नुरिति संज्ञा कृता । स तु नकार-मकारस्थानेऽपि भवति ॥ * ॥
"नुवीपूर्व्वेण संबद्धौ मूर्ध्नौ तु परगामिनौ ।
चत्वारोऽयोगवाहाख्या णत्वकर्म्मण्यचो मताः" ॥
इति दुर्गादासः ॥ * ॥
"अंकारं विन्दुसंयुक्तं पीतविद्युत्समप्रभम् ।
पञ्चप्राणात्मकं वर्णं ब्रह्मादिदेवतामयम् ॥
सर्व्वज्ञानमयं वर्णं विन्दुत्रयसमन्वितम्" ॥
इति कामधेनुतन्त्रम् ॥ (वङ्गीयभाषायाम् ।) तस्य लेखनप्रकारो यथा ।
"अकाररूपशीर्षे तु दक्षिणे विन्दुरूपिणी ।
ब्रह्मा विष्णुश्च रुद्रश्च क्रमशस्तासु तिष्ठति ॥
या तु विन्दुमयी रेखा सैवाद्या शक्तिरीरिता" ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ अस्य नामानि यथा ।
"अंकारश्चक्षुषो दन्तो घटिका समगुह्यकः ।
प्रद्युम्नः श्रीमुखी प्रीतिर्वीजयोनिर्वृषध्वजः ॥
परं शशी प्रमाणीशः सोमविन्दुः कलानिधिः ।
अक्रूरश्चेतना नादपूर्णा दुःखहरः शिवः ॥
शिवः शम्भुर्नरेशश्च सुखदुःखप्रवर्त्तकः ।
पूर्णिमा रेवती शुद्धः कन्याचरवियद्रविः ॥
अमृताकर्षिणी शून्यं विचित्रा व्योमरूपिणी ।
केदारो रात्रिनाशश्च कुब्जिका चैव वुद्बुदः" ॥
इति तन्त्रशास्त्रम् ॥

अं, क्ली, परं ब्रह्म । इत्येकाक्षरकोषः ॥ (महेश्वरः । यदुक्तम् महाभारते १३ । १७ । १२६ ।
"विन्दुविसर्गः सुमुखः शरः सर्व्वायुधः सहः" ॥)

---

## अः

अः अःकारः स च विसर्गः । द्विविन्दुमात्रकण्ठावर्णो-ऽयं अकार उच्चारणार्थः । तन्त्रमते स च षोड़श-स्वरवर्णः । (पाणिन्यादिमते अयं अयोगवाह एव । अयोगवाहस्य व्युत्पत्तिस्तु अनुस्वारशब्दे द्रष्टव्या ।) वोपदेवेनास्य विरिति संज्ञा कृता । स तु सका-ररकारयोः स्थानेऽपि भवति ॥ * ॥
"अःकारं परमेशानि ! विसर्गसहितं सदा ।
अःकारं परमेशानि ! रक्तविद्युत्प्रभामयम् ॥
पञ्चदेवमयो वर्णः पञ्चप्राणमयः सदा ।
सर्व्वज्ञानमयो वर्ण आत्मादितत्त्वसंयुतः ॥
विन्दुत्रयमयो वर्णः शक्तित्रयमयः सदा ।
किशोरवयसाः सर्व्वे गीतवाद्यादितत्पराः ॥
शिवस्य युवती एताः स्वयं कुण्डली मूर्त्तिमान्" ॥
इति कामधेनुतन्त्रम् ॥ (वङ्गीयभाषायां) तस्य लेखनप्रकारो यथा ।
"अकाररूपदक्षे तु द्विविन्दुरथ ऊर्द्धतः ।
ब्रह्मेशविष्णवस्तासु मात्रा शक्तिः समीरिता ॥
विन्दुद्वयान्विता रेखा सैवाद्या शक्तिरीरिता" ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ अस्य नामानि यथा ।
"अः कण्ठको महासेनः कालापूर्णामृता हरिः ।
इच्छा भद्रा गणेशश्च रतिर्विद्यामुखी सुखम् ॥
द्विविन्दुरसना सोमोऽनिरुद्धो दुःखसूचकः ।
द्विजिह्वः कुण्डलं वक्त्रं सर्गः शक्तिर्निशाकरः ।
सुन्दरी सुयशानन्ता गणनाथो महेश्वरः" ॥
इति तन्त्रशास्त्रम् ॥

अः, पुं, महेश्वरः । इत्येकाक्षरकोषः ॥ (यदुक्तम्,— महाभारते १३ । १७ । १२६ ।
"विन्दुर्विसर्गः सुमुखः शरः सर्व्वायुधः सहः" ॥)

